॥७१॥ उत् ऊं स्यः देवः सविता हिरण्यया बाहू अयंस्त स-
वनाय सुऽक्रतुः घृतेन पाणी अभि प्रुष्णुते मखः युवा सुऽदक्षः
रजसः विऽधर्मणि ॥१॥ देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम
वसुनः च दावने यः विश्वस्य द्विऽपदः यः चतुःऽपदः निऽवेशने
प्रऽसवे च असि भूमनः ॥२॥ अदब्धेभिः सवितः पायुऽभिः त्वं शि-
वेभिः अद्य परि पाहि नः गयं हिरण्यऽजिह्वः सुविताय नव्यसे रक्ष
माकिः नः अघऽशंसः ईशत ॥३॥ उत् ऊं स्यः देवः सविता दमूनाः
हिरण्यऽपाणिः प्रतिऽदोषं अस्थात् अयःऽहनुः यजतः मंद्रऽजि-
ह्वः आ दाशुषे सुवति भूरि वामं ॥४॥ उत् ऊं अयान् उपवक्ता-
ऽइव बाहू हिरण्यया सविता सुऽप्रतीका दिवः रोहांसि अरुहत्
पृथिव्याः अरीरमत् पतयत् कत् चित् अभ्वं ॥५॥ वामं अद्य स-
वितः वामं ऊं श्वः दिवेऽदिवे वामं अस्मभ्यं साबीः वामस्य हि
क्षयस्य देव भूरेः अया धिया वामऽभाजः स्याम ॥६॥१५॥

---

॥७२॥ इंद्रासोमा महि तत् वां महिऽत्वं युवं महानि प्रथमानि
चक्रथुः युवं सूर्यं विविदथुः युवं स्वः विश्वा तमांसि अहतं निदः
च ॥१॥ इंद्रासोमा वासयथः उषसं उत् सूर्यं नयथः ज्योतिषा सह
उप द्यां स्कंभथुः स्कंभनेन अप्रथतं पृथिवीं मातरं वि ॥२॥ इंद्रासो-
मौ अहिं अपः परिऽस्थां हथः वृत्रं अनु वां द्यौः अमन्यत प्र अ-
र्णांसि ऐरयतं नदीनां आ समुद्राणि पप्रथुः पुरूणि ॥३॥ इंद्रासो-
मा पक्वं आमासु अंतः नि गवां इत् दधथुः वक्षणासु जगृभथुः
अनपिऽनद्धं आसु रुशंत् चित्रासु जगतीषु अंतः ॥४॥ इंद्रासोमा
युवं अंग तरुत्रं अपत्यऽसाचं श्रुत्यं राथे युवं शुष्मं नर्यं चर्षणि-
ऽभ्यः सं विव्यथुः पृतनाऽसहं उग्रा ॥५॥१६॥

514 ॥ ७३ ॥ १–३ भरद्वाजो बार्हस्पत्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥७३॥ यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो ह-
विष्मान् । द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रो-
रवीति ॥१॥ जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ च-
कार । घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन्
॥२॥ बृहस्पतिः समजयद्वसूनि महो व्रजान् गोमतो देव एषः ।
अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥३॥१७॥

515 ॥ ७४ ॥ १–४ भरद्वाजो बार्हस्पत्यः ॥ सोमारुद्रौ ॥ त्रिष्टुप् ॥

॥७४॥ सोमारुद्रा धारयेथामसुर्यं१ प्र वामिष्टयोऽरमश्नुवंतु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥१॥
सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि संतु ॥२॥
सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं । अव स्यतं
मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥३॥ तिग्मा-
युधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः । प्र नो
मुंचतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥१८॥

516 ॥ ७५ ॥ १–१९ पायुर्भारद्वाजः ॥ १ वर्म । २ धनुः । ३ ज्या । ४ आर्त्नी । ५ इषुधिः । ६[1] सारथिः । ६[2] रश्मयः । ७ अश्वाः । ८ रथः । ९ रथगोपाः । १० लिंगोक्तदेवताः । ११. १२. १५. १६ इषवः । १३ प्रतोदः । १४ हस्तघ्नः । १७–१९ लिंगोक्तदेवताः संग्रामाशिषः (१७ युद्धभूमिर्ब्रह्मणस्पतिरदितिश्च । १८ कवचसोमवरुणाः । १९ देवा ब्रह्म च) ॥ १–५. ७–९. ११. १४. १८ त्रिष्टुप् । ६. १० जगती । १२. १३. १५. १६. १९ अनुष्टुप् । १७ पंक्तिः ॥

॥७५॥ जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामु-
पस्थे । अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पि-
पर्तु ॥१॥ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो
जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो ज-

॥७३॥ यः अद्रिऽभित् प्रथमऽजाः ऋतऽवा बृहस्पतिः आंगिरसः हविष्मान् द्विबर्हऽज्मा प्राघर्मऽसत् पिता नः आ रोदसी इति वृषभः रोरवीति ॥१॥ जनाय चित् यः ईवते ऊं इति लोकं बृहस्पतिः देवऽहूतौ चकार घ्नन् वृत्राणि वि पुरः दर्दरीति जयन् शत्रून् अमित्रान् पृत्ऽसु सहन् ॥२॥ बृहस्पतिः सं अजयत् वसूनि महः व्रजान् गोऽमतः देवः एषः अपः सिसासन् स्वः अप्रतिऽइतः बृहस्पतिः हंति अमित्रं अर्कैः ॥३॥१७॥

---

॥७४॥ सोमारुद्रा धारयेथां असुर्यं प्र वां इष्टयः अरं अश्नुवंतु दमेऽदमे सप्त रत्ना दधाना शं नः भूतं द्विऽपदे शं चतुःऽपदे ॥१॥ सोमारुद्रा वि वृहतं विषूचीं अमीवा या नः गयं आऽविवेश आरे बाधेथां निःऽऋतिं पराचैः अस्मे इति भद्रा सौश्रवसानि संतु ॥२॥ सोमारुद्रा युवं एतानि अस्मे इति विश्वा तनूषु भेषजानि धत्तं अव स्यतं मुंचतं यत् नः अस्ति तनूषु बद्धं कृतं एनः अस्मत् ॥३॥ तिग्मऽआयुधौ तिग्मऽहेती इति सुऽशेवौ सोमारुद्रौ इह सु मृळतं नः प्र नः मुंचतं वरुणस्य पाशात् गोपायतं नः सुऽमनस्यमाना ॥४॥१८॥

---

॥७५॥ जीमूतस्यऽइव भवति प्रतीकं यत् वर्मी याति सऽमदां उपऽस्थे अनाविद्धया तन्वा जय त्वं सः त्वा वर्मणः महिमा पिपर्तु ॥१॥ धन्वना गाः धन्वना आजिं जयेम धन्वना तीव्राः सऽमदः जयेम धनुः शत्रोः अपऽकामं कृणोति धन्वना सर्वाः प्रऽदिशः ज-

येम ॥ २ ॥ व॒क्ष्यंती॒वेदा गं॑नीगंति॒ कर्णं॑ प्रि॒यं सखा॑यं परिष॒स्व॒जा॒ना । योषे॑व शिंक्ते॒ वित॒ताधि॒ धन्व॒ञ्ज्या इ॒यं सम॑ने पा॒रयं॑ती ॥ ३ ॥ ते आ॒चरं॑ती॒ सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृतामु॒पस्थे॑ । अप॒ शत्रू॑न्विध्यतां संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रंती॑ अ॒मित्रा॑न् ॥ ४ ॥ ब॒ह्वी॒नां पि॒ता ब॒हुर॑स्य पु॒त्रश्चि॒श्चा कृ॑णोति॒ सम॑नाव॒गत्यं॑ । इ॒षु॒धिः संकाः॒ पृत॑नाश्च॒ सर्वाः॑ पृ॒ष्ठे निन॑द्धो जयति॒ प्रसू॑तः ॥ ५ ॥ १९ ॥ रथे॒ तिष्ठ॑न्नयति वा॒जिनः॑ पु॒रो यत्र॑यत्र का॒मय॑ते सुषा॒र॒थिः । अ॒भीशू॑नां म॒हि॒मानं॑ पनायत॒ मनः॑ प॒श्चाद॑नु यच्छंति र॒श्मयः॑ ॥ ६ ॥ ती॒व्रान्घोषा॑न्कृण्वते॒ वृष॑पाणयोऽश्वा॒ रथे॑भिः स॒ह वा॒जयं॑तः । अ॒व॒क्राम॑न्तः॒ प्रप॑दैर॒मित्रा॑न् क्षि॒णंति॒ शत्रूँ॒रन॑पव्ययंतः ॥ ७ ॥ र॒थ॒वा॒हनं॑ ह॒विर॑स्य॒ नाम॒ यत्रायु॑धं॒ निहि॑तमस्य॒ वर्म॑ । तत्रा॒ रथ॒मुप॑ श॒ग्मं स॑देम वि॒श्वाहा॑ व॒यं सु॑मन॒स्यमा॑नाः ॥ ८ ॥ स्वा॒दु॒षं॒सदः॑ पि॒तरो॑ वयो॒धाः कृ॑च्छ्रे॒श्रितः॒ शक्ती॑वंतो गभी॒राः । चि॒त्रसे॑ना॒ इषु॑बला॒ अमृ॑ध्राः स॒तोवी॑रा उ॒रवो॑ व्रातसा॒हाः ॥ ९ ॥ ब्राह्म॑णा॒सः॒ पित॑रः॒ सोम्या॑सः शि॒वे नो॒ द्यावा॑पृथि॒वी अ॑ने॒हसा॑ । पू॒षा नः॑ पातु दुरि॒ताद्दृ॑तावृधो॒ रक्षा॒ माकि॑र्नो अ॒घशं॑स ईशत ॥ १० ॥ २० ॥ सु॒प॒र्णं व॑स्ते मृ॒गो अ॑स्या॒ दंतो॒ गोभिः॒ संन॑द्धा पतति॒ प्रसू॑ता । यत्रा॒ नरः॒ सं च॒ वि च॒ द्रवं॑ति॒ तत्रा॒स्मभ्य॒मिष॑वः॒ शर्म॑ यंसन् ॥ ११ ॥ ऋजी॑ते॒ परि॑ वृंग्धि॒ नोऽश्मा॑ भवतु नस्त॒नूः । सोमो॒ अधि॑ ब्रवीतु॒ नोऽदि॑तिः॒ शर्म॑ यच्छतु ॥ १२ ॥ आ जं॑घंति॒ सान्वे॑षां ज॒घनाँ॒ उप॑ जिघ्नते । अश्वा॑जनि॒ प्रचे॑त॒सोऽश्वा॒न्त्स॒मत्सु॑ चोदय ॥ १३ ॥ अहि॑रिव भो॒गैः पर्ये॑ति बा॒हुं ज्याया॑ हे॒तिं प॑रि॒बाध॑मानः । ह॒स्त॒घ्नो विश्वा॑ व॒युना॑नि वि॒द्वान्पु॒-

येम ॥२॥ वक्ष्यंतीऽइव इत् आ गनीगंति कर्णं प्रियं सखायं परि-
ऽसस्वजाना योषाऽइव शिंक्ते विऽतता अधि धन्वन् ज्या इयं
समने पारयंती ॥३॥ ते॰ आऽचरंती॰ समनाऽइव योषा माता-
ऽइव पुत्रं बिभृतां उपऽस्थे अप शत्रून् विध्यतां संऽविदाने॰
आर्त्नी॰ इमे॰ विऽस्फुरंती॰ अमित्रान् ॥४॥ बह्वीनां पिता बहुः
अस्य पुत्रः चिश्चा कृणोति समना अवऽगत्य इषुऽधिः संकाः पृ-
तनाः च सर्वाः पृष्ठे निऽनद्धः जयति प्रऽसूतः ॥५॥१९॥ रथे तिष्ठन्
नयति वाजिनः पुरः यत्रऽयत्र कामयते सुऽसारथिः अभीशूनां
महिमानं पनायत मनः पश्चात् अनु यच्छंति रश्मयः ॥६॥ तीव्रान्
घोषान् कृण्वते वृषऽपाणयः अश्वाः रथेभिः सह वाजयंतः अव-
ऽक्रामंतः प्रऽपदैः अमित्रान् क्षिणंति शत्रून् अनपऽव्ययंतः ॥७॥
रथऽवाहनं हविः अस्य नाम यत्र आयुधं निऽहितं अस्य वर्म तत्र
रथं उप शग्मं सदेम विश्वाहा वयं सुऽमनस्यमानाः ॥८॥ स्वा-
दुऽसंसदः पितरः वयःऽधाः कृच्छ्रेऽश्रितः शक्तिऽवंतः गभीराः
चित्रऽसेनाः इषुऽबलाः अमृध्राः सतःऽवीराः उरवः व्रातऽसहाः
॥९॥ ब्राह्मणासः पितरः सोम्यासः शिवे॰ नः द्यावापृथिवी॰ अने-
हसा पूषा नः पातु दुःऽइतात् ऋतऽवृधः रक्ष माकिः नः अघ-
ऽशंसः ईशत ॥१०॥२०॥ सुऽपर्णं वस्ते मृगः अस्याः दंतः गोभिः
संऽनद्धा पतति प्रऽसूता यत्र नरः सं च वि च द्रवंति तत्र अस्मभ्यं
इषवः शर्म यंसन् ॥११॥ ऋजीते परि वृङ्धि नः अश्मा भवतु नः तनूः
सोमः अधि ब्रवीतु नः अदितिः शर्म यच्छतु ॥१२॥ आ जंघंति सानु
एषां जघनान् उप जिघ्नते अश्वऽअजनि प्रऽचेतसः अश्वान्
समत्ऽसु चोदय ॥१३॥ अहिःऽइव भोगैः परि एति बाहुं ज्या-
याः हेतिं परिऽबाधमानः हस्तऽघ्नः विश्वा वयुनानि विद्वान् पु-

मान्युमांसं परि पातु विश्वतः ॥१४॥ आलाक्ता या रुरुशी-
र्ष्ण्यथो यस्या अयो मुखं। इदं पर्जन्यरेतस इष्वै देव्यै बृह-
न्नमः ॥१५॥२१॥ अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥१६॥ यत्र
बाणाः संपतंति कुमारा विशिखा इव। तत्रा नो ब्रह्मणस्प-
तिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१७॥ मर्माणि
ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्तां। उरो-
र्वरीयो वरुणस्ते कृणोतु जयंतं त्वानु देवा मदंतु ॥१८॥ यो
नः स्वो अरणो यश्च निष्ट्यो जिघांसति। देवास्तं सर्वे धूर्वंतु
ब्रह्म वर्म ममांतरं ॥१९॥२२॥६॥६॥

॥ इति षष्ठं मंडलं समाप्तं ॥

---

मा न॒ पुमां॑सं॒ परि॑ पातु वि॒श्वतः॑ ॥१४॥ आलाऽअक्ता या रुरुऽशी-
र्ष्ण्यथो॒ यस्याः॒ अयः॒ मुखं॑ इ॒दं प॒र्जन्य॑ऽरेतसे इष्वै॑ दे॒व्यै बृ॒हत्
नमः॑ ॥१५॥२१॥ अव॑ऽसृष्टा परा॑ प॒त शर॑व्ये ब्रह्म॑ऽसंशिते गच्छ॑
अ॒मित्रा॑न् प्र प॑द्यस्व॒ मा अ॒मीषां॑ कं च॒न उत् शि॒षः ॥१६॥ यत्र॑
बा॒णाः सं॒ऽपत॑न्ति कु॒मा॒राः वि॒शि॒खाःऽइ॑व तत्र॑ नः॒ ब्रह्म॑णः पतिः॑
अदि॑तिः॒ शर्म॑ य॒च्छ॒तु॒ वि॒श्वाहा॑ शर्म॑ य॒च्छ॒तु॒ ॥१७॥ मर्मा॑णि ते॒
वर्म॑णा छा॒द॒या॒मि॒ सोमः॑ त्वा॒ राजा॑ अ॒मृते॑न अनु॑ व॒स्तां॒ उ॒रोः॑ व-
री॑यः वरु॑णः॒ ते॒ कृ॒णो॒तु॒ जय॑न्तं त्वा॒ अनु॑ दे॒वाः म॒द॒न्तु॒ ॥१८॥ यः॒ नः॒ स्वः
अर॑णः यः च॒ निष्ट्यः॑ जिघां॑सति दे॒वाः तं सर्वे॑ धूर्व॒न्तु॒ ब्रह्म॑ वर्म॑ मम॑
अन्त॑रं ॥१९॥ २२॥ ६॥ ६॥

॥ इति षष्ठं मंडलं समाप्तं ॥



*Reprinted by*
K. L. Sachadeva, Skylark Printers, 479, Matia Mahal, Delhi-6.
(Offi. K 2/8 Model Town, Delhi-9 Phone 225689)